शब्दायमानः कविकायाः खलीनस्य अन्तः यस्य तम् । पक्षे मुखरैः कविभिः कान्तम् । जन्यं युद्धम्, पक्षे जनिः जन्म तस्यै अहितम् । भस्मवत् भस्मना च धवलो विग्रहो यस्य तम् । देवमणिः आवर्तविशेषः, कौस्तुभश्च । धारा सलिलधारा, अश्वगतिपञ्चकं च । पर्याणं अश्वपल्ययनम् ॥

२०९. तत इति । अनुभावः महिमा । छाया अनातपः, कान्तिश्च ॥

२१० प्रतिकवीति । बाणमयूरसुबन्धुशब्दाः तत्तन्नामप्रसिद्ध-कविवाचकाश्च । अर्थान्तरं तु सुगमम् ॥

जयतीति । कविमात्मानं मन्यत इति कविंमन्यः । खद्योतः सूर्यः, ज्योतिरिङ्गणः । कीटमणिः खद्योतः ॥

सुगुणेति । स्वमेव स्वयं वक्तीति भाति ॥

गाथा इति । तथागताः सौगताः । सत्रा सह । भूम्नां महिम्नाम् । कद्वदाः गर्ह्यवादिनः । 'रथवदयोश्च' इति कोः कदादेशः ।

इति चतुर्थ उच्छ्वासः ।



